gaṅ phyir ji ltar phan tshun mtshan ñid mi mthun pa gzugs la sogs pa ñams su myoṅ ba rnams la phan tshun tha dad par 'gyur ba de ltar śes pa rnams la yaṅ ste। de'i phyir śes pa'i tshul gñis pa ñid yod do ॥

ज्ञानानामन्योन्यभेदस्मरणादपि साध्यते। कुतः यथा परस्परविलक्षणरूपाद्यनुभवाः परस्परविभिन्नस्मरणानि उत्पद्यन्ते तथा ॥

smras pa

आह—

gaṅ gi[1] snaṅ ba[2] de gshal bya।
tshad ma daṅ de'i 'bras bu ni ॥
'dsin rnam rig pa'i de yi phyir।
de gsum tha dad du ma byas ॥ 11 ॥

यदाभासं प्रमेयं तत्प्रमाणमथ तत्फलम्।
ग्राहकाकारसंवित्ती त्रयं नातः पृथक्कृतम् ॥ ११ ॥

*Notes.*

1. Cf. N.R., p. 159.—योगाचारास्तु बाह्यार्थमपलपन्तो ज्ञानस्यैवानादिवासनोपप्लावितो नीलपीतादिविषयाकारः प्रमेयं, स्वाकारः प्रमाणं, स्वसंवित्तिः फलमिति मन्यन्ते यथाहुः—

[1] PS. gan tshe. [2] V[1] rnam pa.

यदाभासं प्रमेयं तत्प्रमाणफलयोः पुनः ।
ग्राहकाकारसंवित्यो त्रयं नातः पृथक् कृतम् ॥
इति ।

2. SVK., p. 238.

yul śes pa daṅ de śes pa'i ।
dbye bas blo yi tshul gñis ñid ॥
dus phyis dran pa las kyaṅ ṅo ।
gaṅ phyir ma myoṅ bar 'di med ॥ 12 ॥

विषयज्ञानतज्ज्ञानभेदाद्बुद्धेर्द्विरूपता ।
स्मृतेरप्युत्तरे काले नह्यसावविभावितः ॥ १२ ॥

*Notes.*

1. The last line of the Tibetan text appears to be defective.

2. Cf. NR., p. 298.—तथा ग्राहकेऽपि गृहीते तद्गाभाग्राह्योऽपि गृहीतव्य इति । किं च, यदि ग्राह्यं ग्राहकमिति च गृह्यते, ततोऽस्य ग्राकारत्वे किं प्रमाणं, न तु ज्ञानान्तरं, तस्यापि स्वांशपर्यवसानादित्याह एवमिति—एवमेकग्रहणेऽपरस्यापि ग्रहणप्रसङ्गे परः पुनराह, अस्त्येव साध्याकारा संवित्तिः, उत्पद्यमानमेव हि ज्ञानं ग्राह्याकारेण घटादिना ग्राहकाकारेण च ज्ञानरूपेण प्रका-

ज्ञाते । उत्तरोत्तरज्ञानविशेषादुत्तरकाले चोभयत्र स्मृति-दर्शनात्, स्वयं प्रकाशस्तस्य अनुमीयते । तथाहुः—

घटविज्ञानतज्ज्ञानविशेषात्तु द्विरूपता ।
स्मृतेरुत्तरकाले च नह्यसाधविभावितः ॥ इति ॥

ses pa gzhan gyis ñams myoṅ na ।
thug med de la'aṅ dran pa ste ॥
de bzhin yul gzhan la 'pho ba ।
med gyur de yaṅ mthoṅ ba ñid ॥ 13 ॥

ज्ञानान्तरेणानुभवेऽनवस्था तत्र च स्मृतिः ।
विषयान्तरसंचारस्तथा न स्यात् सचेष्यते ॥ १३ ॥

*Notes.*

1. Cf. NR., p. 277.—मा नाम संवेदिज्ञानमिति-चेत्, उत्तरकाले स्मृतिदर्शनात्; एवं चैकविषयज्ञान-प्रवाहे एवायुषः पर्यवसानाद्विषयान्तरसंचारो न स्यात्। यथाहुः—

ज्ञानान्तरेणानुभवे हीष्टा तत्रापि च स्मृतिः ।
विषयान्तरसञ्चारस्तथा न स्यात् स चेष्यते । इति ॥

2. *Ibid.*, p. 321 ff.—यत्तु भिक्षुणोक्तं ज्ञाना-न्तरेणानुभवोऽनिष्टस्तत्रापि हि स्मृतिरिति तदिदमनु-भाष्यते अन्येनेति । ज्ञाते घटे पश्चाद्घटे तज्ज्ञाने च

स्मृतिर्दृश्यते, सा च गृहीतविषया, तेन ज्ञानमपि गृहीतमुत्पत्त्यवस्थायामित्यभ्युपगन्तव्यम्। तद्यदि ज्ञानान्तरेण गृह्येत ततस्तस्यापि ज्ञानस्य पूर्ववदुत्पत्तौ अग्रहणाज्ज्ञानान्तरापेक्षा, तत्रापि तथेत्यनवस्था स्यादिति॥

3. Cf. TSP., p. 565.—किं च यदि ज्ञानान्तरेण अनुभवोऽङ्गीक्रियते तदा तत्रापि ज्ञानान्तरे स्मृतिरुत्पद्यत एव, ज्ञानज्ञानं ममोत्पन्नमिति। तस्याप्यपरेणानुभवो वक्तव्यः। न ह्यननुभूते स्मृतिर्युक्ता, ततश्चेमा ज्ञानमालाः कोऽनन्यकर्मा जनयतीति वक्तव्यम्। न तावदर्थः तस्य मूलज्ञानविषयत्वात्। नापीन्द्रियालोकौ, तयोश्चक्षुर्ज्ञानपवोपयोगात्। नापि निर्निमित्ता, सदा सत्त्वादिप्रसङ्गात्। सैव बुद्धिरुत्तरोत्तरां बुद्धिं जनयतीति चेदाह—गोचरान्तरेत्यादिना। एवं हि विषयान्तरसञ्चारो न प्राप्नोति, तथा हि पूर्वपूर्वबुद्धिरुत्तरोत्तरस्य ज्ञानस्य विषयभावेनावस्थिता प्रत्यासन्नाचोपादानकारणतया तां तादृशीमन्तरङ्गिकां त्यक्त्वा कथं च बहिरङ्गमर्थं गृह्णीयात्। ........भवतु नामार्थान्तरसंचरोऽनुपपद्यमानोऽपि। तथापि यत्तदन्यज्ज्ञानं तत्केनाभिभूयेतेति वक्तव्यम्। अथ स्यात्—सैवोत्तरा बुद्धिरर्थान्तरग्राहिणी पूर्वां धियमर्थं चोभयमपि गृह्णातीति, तदेतदसम्यक्। ........ स्वसंवित्तेरनभ्युपगमाच्च स्वतःसिद्धता, नाऽपि परतः,

अनवस्थादोषात्, तस्यान्यस्यासिद्धौ पूर्वकस्याप्यसिद्धिः, अप्रत्यक्षोपलम्भकत्वात् । न कदाचित्किञ्चिदुपलभ्येत । ततश्चान्ध्यमायातमशेषस्य जगतः । अथान्तस्य यथोक्त-दोषभयात् स्वसंवित्त्या स्वत एव सिद्धिरभ्युपगम्यते तदा तद्वदेव सर्वस्य ज्ञानत्वाविशेषात्स्वसंविदस्तु ॥

*Vṛitti.*

ci ste gzugs la sogs pa bzhin du śes pa yaṅ śes pa gzhan gyi myoṅ ba yin no zhe na de yaṅ rigs pa ma yin te । gan gi phyir । . . . . . । thug pa med pa zhes bya ba 'di śes pa śes pa gzhan gyis myoṅ bar byed na na'o । ci ltar zhe na । . . . . . । śes pa gan dag gis śes pa de ñams su myoṅ bar byed na de la yaṅ phyis dran pa mthoṅ dgos pas so । des na de la yaṅ śes pa gzhan gyi ñams su myoṅ ba yin na ni thug pa med par 'gyur ro ॥

अथ रूपादिवत् ज्ञानमपि ज्ञानान्तरेण अनुभूयते चेत् । तदपि न युज्यते । कुतः । ज्ञानान्तरेणेत्यादि । अन-वस्थेति । ज्ञानं ज्ञानान्तरेणानुभूयते । कथंचेत् । तत्रचे-त्यादि । तत्र विज्ञानान्तरे पश्चात् स्मृतिर्दृश्यते । अत स्तस्यापि ज्ञानान्तरेणानुभवेऽनवस्था ॥

de'i phyir gdon mi zha bar raṅ rig pa'i śes pa khas blaṅ bar bya'o । de yaṅ 'bras bu ñid ॥

तस्मादवश्यं ज्ञानं स्वसंवेदनमभ्युपगन्तव्यम्। तदपि फलमेव ॥

rtsod sgrub slob dpon gyi ma yin ।
sñin po ṅes par ma dgoṅs pa ॥
cha śas gzhan du smra ba'i phyir ।
des na kho bos brtag par bya ॥ 14 ॥

नाचार्यस्य वादविधिर्नाकृतंसारनिश्चयः ।
कथनादन्यथांशानां परीक्ष्यास्तेन ते मया ॥ १४ ॥

*Vṛitti.*

mṅon sum rtog pa daṅ bral ba zhes bya ba 'di gnas pa yin no । de'i rjes la gzhan gyis byas pa'i mṅon sum brtag par bya ste ॥

प्रत्यक्षं कल्पनापोढमिति तिष्ठति। तदनु परैः कृतं प्रत्यक्षं परीक्ष्यते ॥

*Tīkā.*

V.T., folio 46 *b*.—'dir slo dpon dbgig gñen gyis rtsod bsgrub pa'o zhes 'jig rten na rab tu grags pa 'di ni bstan bcos mdsad pas ni des mdsad pa'i bstan bcos gzhan rnams skyon med pa ñid la bltas nas । skyon daṅ bcas pa'i rtsod

pa bsgrub pa des mdsad pa ñid mi srid do zhes gsuṅs pa । rtsod sgrub slob dpon gyi ma yin ces pa'o ॥

अत्र वादविधिः आचार्यवसुबन्धुनेति लोकप्रसिद्धिः । इयं तु शास्त्रकारकृतशास्त्रान्तराणां निर्दुष्टत्वमपेक्ष्य । दोषविशिष्टायाः वादविधेस्तत्कर्तृत्वासंभव आह—नाचार्यस्य वादविधिरिति ॥

*Ibid.*, folio 47.—des na zhes pa skyon daṅ ldan pa ñid kyis na'o । de ltar ni gzhan du cha śas brjod pa las zhes pa 'dis rtsod pa sgrub pa skyon daṅ ldan pa ñid du gsal bar bya'o ॥

तेन दोषविशिष्टत्वेन । तथाचान्यथांशकथनादित्यनेन वादविधेर्दोषविशिष्टत्वं व्यज्यते ॥

don de las skyes rnam par śes ।
mṅon sum zhes bya ba 'dir ॥
don de las zhes[1] kun brjod na ।
gaṅ de de 'ba' zhig las min ॥ 15 ॥

ततोऽर्थाज्जातं विज्ञानं प्रत्यक्षमिति तत्र तु ।
ततोऽर्थादिति सर्वं चेत् तयत् तन्मात्रतो न हि ॥१५॥

[1] PS. zhes pas.

*Notes.*

1. Cf. NV., p. 40.—अपरे पुनर्वर्णयन्ति ततोऽर्थाद्विज्ञानं प्रत्यक्षमिति । तन्न । ततोऽर्थादिति यस्यार्थस्य यद्विज्ञानं व्यपदिश्यते यदि तत एव तद्भवति नार्थान्तराद्भवति तत् प्रत्यक्षम् ॥

2. Cf. NVTT., p. 99.—तदेवं प्रत्यक्षलक्षणं समर्थ्य वासुबन्धवं तावत्प्रत्यक्षलक्षणं विकल्पयितुमुपन्यस्यति । ततोऽर्थादिति ॥

3. Cf. K., p. 231.—Ch. V, sl. 6.—प्रत्यक्षं कल्पनापोढं ततोऽर्थादिति केचन ॥

*Vṛitti.*

gal te de las zhes bya ba 'di'i rkyen brjod yin na ni śes pa gaṅ yul gaṅ las skyes pa de'i tha sñad du bya ba'i de 'ba' zhig las ni ma yin no । dmigs pa'i rkyen 'ba' zhig las śes pa skye ba ni ma yin te ॥

यदि तत इति अस्य प्रत्ययस्य आख्यानं यज्ज्ञानं येनार्थेनोत्पद्यते तद्व्यपदेशस्तन्मात्रतो न भवति । आलम्बनप्रत्ययमात्राज्ज्ञानं न जायते ॥

*Tīkā.*

V.T., folio 47.—don de las rnam par śes pa mṅon sum zhes pa । yul gaṅ gis rnam par śes

pa tha sñad bya ba de kho na las skyes pa ste ı de skye zhin gzhan las ma yin la ı de las gzhan las kyaṅ ma yin pa'i śes pa de mṅon sum ste ॥

ततोऽर्थाद्विज्ञानं प्रत्यक्षमिति। यद्विज्ञानं येन विषयेण व्यपदिश्यते तत् तन्मात्रादुत्पद्यते। नान्यतः। ततोऽन्यतश्च न भवतीति तज्ज्ञानं प्रत्यक्षम् ॥

V.T., folio 47 *b*.—gaṅ phyir 'di chos thams cad kyis bdag ñid kyi phyir dmigs pa'i rkyen kho na kun gyi sgras brjod do ı yaṅ ci ltar de chos thams cad kyi bdag ñid yin zhe na ı dmigs pa chos cad do zhes pa'i mtshan ñid kyi phyir ro ı de'i phyir dmigs pa'i rkyen kho na kun gyi sgras bśad do ॥

कुतः। सर्वधर्मात्मकत्वादालम्बनप्रत्यय एव सर्वशब्देनोच्यते। आलम्बस्सर्वधर्मात्मक इति निरूपणात्। आलम्बनप्रत्यय एव सर्वशब्देनोक्तः ॥

gaṅ gis dmigs pa'i rkyen daṅ 'brel pa can ñid kyis śes pa bstan par bya de . . . . . ma yin gyi ı o na ce na rkyen gzhan las kyaṅ ste ı bzhi yis sems daṅ sems byuṅ rnams zhes gsuṅs pa'i phyir ro ı de ltar rkyen ṅes pa'i phyogs la grub pa'i mtha' daṅ mgal ba gsal bar byas so ॥

अथालम्बनप्रत्ययसम्बन्धित्वेनैव न ज्ञानं व्यपदिश्यते किं तु प्रत्ययान्तरेणापि । चतुर्भिश्चित्तचैत्ता इत्युक्तत्वात् । तथा च प्रत्ययनियमपक्षे सिद्धान्तविरोधः ॥

dmigs pa'o zhe na dran sogs kyi ı
śes pa'an gzhan la bltos ma yin ‖ 16 ‖

आलम्बनं चेत् स्मृत्यादिज्ञानं नान्यदपेक्षते ॥ १६ ॥

gal te don de las zhes pa 'di yul rtsam la yin na ni dran pa daṅ rjes su dpag pa daṅ mṅon par 'dod la sogs pa'i śes pa yaṅ dmigs par bya ba gzhaṅ mi bltos te ı me la sogs pa'i śes pa ni du ba la sogs pa la dmigs pa ma yin no ‖

यदि ततोऽर्थादिति विषयमात्रं स्मरणानुमानाभिलाषादिज्ञानं नान्यदालम्बनमपेक्षते। वह्न्यादिज्ञानं धूमादीनालम्ब्य न भवति ॥

*Tīkā.*

V.T., folio 47 *b*.—dmigs pa ṅes pa'i dbaṅ du byas te gsuṅs pa ı dmigs pa'o zhes pa la sogs pa ste ı 'di la mtshan ñid ha can khyab pa ñid du gsuṅs so ‖

आलम्बननियममधिकृत्य आह । आलम्बनं चेदित्यादि । अत्र लक्षणस्य अतिव्याप्तिमत्वमाह ॥

*Ibid.*—dran pa la sogs pa'i śes pa yaṅ gzugs la sogs pa rnams kyis tha sñad byed ste । gzugs dran no । dmigs pa gzhan la mi bltos pa yaṅ ste । de'i phyir de yaṅ mṅon sum ñid du 'gyur ro ॥

स्मरणादिज्ञानमपि रूपादिभिर्व्यपदिश्यते रूपस्मरणमिति । आलम्बनान्तरमनपेक्ष्य च भवति । तस्मात् तदपि प्रत्यक्षं स्यात् ॥

de ñid smras pa

तदेवोक्तम्—

gaṅ zhig snaṅ ba de las min ।
[1]lha po bsags la dmigs pa'i phyir ॥
gaṅ las de ni don dam pa ।
de la tha sñad du ma byas ॥ 17 ॥

पञ्चसञ्चयस्यालम्बाद्यदाभासं ततो न हि ।
यतोऽसौ परमार्थः स्याच्च तस्य व्यपदिश्यते ॥ १७ ॥

—zhes bya ba ni bar skabs kyi tsogs su bcad pa'o ॥

इत्यवसरकारिका ॥

[1] V[1] sems kyi dmigs pa lha rnams so—order of the line is changed.

*Note.*

Cf. TB., p. 16.

*Tīkā.*

V.T., 48 ff.—gaṅ snaṅ de ni de las min zhes pa tshogs pa'i snaṅ ba'o । lha po bsags pa dmigs pa'i phyir ces pa ste । tshogs par snaṅ pas sa zhes pa'i don te ॥

gaṅ las de ni don dam par zhes pas rdul phra rab las so । de la tha sñad du ma byas zhes pa । de snaṅ ba ma yin pa ñid kyis de ma rtogs pa ñid kyi phyir ro ॥

यदाभासं ततो न हीति समूहाभासः । पञ्चसञ्चयस्यालम्बादिति समुदायाभास इत्यर्थः ॥

यतोऽसौ परमार्थ इति । परमाणुः । न तस्य व्यपदिश्यत इति । तदनाभासत्वेन तदप्रतीतेः ॥

don gyi tsul[1] gyis dben pa yaṅ ।
brjod bya ma yin yul 'di'i yaṅ ॥
spyi yi tsul gyis bstan par bya ।
des na tha sñad du mi bya ॥ 18 ॥

अर्थरूपात्तु भेदेन वाच्यो न विषयोऽस्य च ।
वाच्यः सामान्यरूपेण व्यपदेश्यस्ततो न हि ॥१८॥

---

[1] PS. ṅo bos.

*Note.*

Cf. SV., p. 339.—"न चार्थरूपाद्भेदेन धियामस्ति निरूपणम्"—The Tibetan Text seems to be defective.

*Vṛitti.*

rnam par śes pa lna rnams kyi yul de'i spyi'i tsul gyis tha sñad du bya ba yin gyi raṅ gi ṅo bo tsul gyis tha sñad du bya ba ni ma yin no ॥

पञ्चविज्ञानविषयाः सामान्यरूपेण व्यवह्रियन्ते न स्वलक्षणरूपेण ॥

śes pa thams cad kyi don gyi ṅo bo las gzhan du tha sñad bya bar mi nus so ॥

ज्ञानं सर्वं अर्थरूपादन्यथा व्यवहर्तुं न शक्यते ॥

spyi'i ṅo bo tsul las ni gzugs la sogs pa tha sñad du byed do । de'i phyir rnam par śes pa lṅa rnams kyi yul ni tha sñad du bya bar mi nus so zhes bya ba *rtsod pa sgrub* pa'o ॥

सामान्यस्वरूपाकारेण रूपादयो व्यवह्रियन्ते तस्मात् पञ्चविज्ञानविषया व्यवहाराऽयोग्या इति वादाविधिः ॥

*rig pa can rnams* ni dbaṅ po daṅ don phrad pa las skyes pa'i śes pa tha sñad du bya

ba ma yin pa 'khrul pa med pa zhen pa'i bdag ñid can ni mṅon sum zhes zer ro ॥

नैयायिकास्तु—

इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षमित्याहुः ॥

Cf. NS., I., 14.

*Ṭīkā.*

V.T., folio 51 ff.—de rnams kyi phrad pa ni 'brel ba yin te । de ni rnam pa lṅa ste sbyor ba daṅ sbyar ba la 'du ba daṅ । sbyar ba 'dus pa las 'du ba daṅ । 'du ba daṅ 'dus pa las 'du ba'o ॥

de ltar 'brel ba rnam pa lṅa ṡes pa'i rgyu'o । de las skyes pa ste । mṅon par gsal ba ma yin pao ॥

तेषां सन्निकर्षः सम्बन्धः । स च पञ्चविधः । संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायश्चेति ॥

ईदृशस्सम्बन्धः पञ्चविधः ज्ञानकारणं । तस्मादुत्पन्नं न त्वभिव्यक्तमिति ॥

dir yaṅ khyad par rnams rigs pa ma yin te ॥

अत्रापि विशेषणानि न युज्यन्ते ॥

dbaṅ po las byuṅ don blo la ।
tha sñad la sogs srid ma yin ॥ 19 ॥

नेन्द्रियोत्पन्नार्थबुद्धेर्व्यपदेश्यादि संभवेत् ॥ १९ ॥

*Tīkā.*

V.T., folio 51 ff.—sogs pa smos pa la 'khrul pa ñid daṅ zhen pa'i bdag ñid kyaṅ ṅo ॥

आदिशब्देन अव्यभिचारित्वं व्यवसायात्मकत्वं च ॥

bar daṅ bcas pa 'dsin pa daṅ ।
śes pa lhag pa'aṅ thob mi 'gyur ॥
rten las dbaṅ po phyir min par ।
yul la 'dsin par nus ma yin ॥ 20 ॥

सान्तरग्रहणं न स्यात् प्राप्तौ ज्ञानाधिकस्य च ।
अधिष्ठानाद्बहिर्नाक्षं न शक्तिर्विषये क्षणे ॥ २० ॥

*Notes.*

1. Cf. NV., p. 34; NVTT., p. 76.—यथोक्तं दिङ्नागेन, etc. । बाहिर्वर्तित्वादिन्द्रियस्योपपन्नं सान्तरग्रहणमितिचेदत उक्तं '<u>अधिष्ठानाद्बहिर्नाक्ष</u>' मिति । किंत्वधिष्ठानदेश एवेन्द्रियम् । कुतः तच्चिकित्सादियोगतः ।

सत्यपि च बहिर्भावे न शक्तिर्विषयेक्षणे। यदि च स्यात् तदा पश्येदप्युन्मील्य निमीलनात्। यदि च स्यादुन्मील्य-निमीलितनयनोऽपि रूपं पश्येदुन्मीलनादस्ति बहिरिन्द्रिय मिति ॥

2. Cf. NR., p. 146.—

ततश्चाप्राप्यकारित्वात् यद्बौद्धैः श्रोत्रचक्षुषोः।
लक्षणव्याप्तिसिद्ध्यर्थं संयोगो नेति कीर्त्यते ॥

3. Cf. TRV., p. 48.—किंच यदि प्राप्यकारि चक्षुः स्यात्सान्तराधिकग्रहणं न प्राप्नोति। नहीन्द्रियाणां निरन्तरे विषये गन्धादौ सान्तरग्रहणं दृष्टं, नाप्यधिक-ग्रहणं। अथ मतं बहिरधिष्ठानाद्वृत्तिरिन्द्रियस्य अतः उप-पन्नं तद्विषयस्य सान्तराधिकग्रहणमिति तदयुक्तम् ॥

*Vṛitti.*

dbaṅ po gñis kyi rten las phyi rol du 'zug pa ste des na yul de bar daṅ bcas pa lhag par 'dzin pa yaṅ 'thad pa yin no zhe na de yaṅ rigs pa ma yin te gaṅ gi phyir ॥

ननु ते चक्षुःश्रोत्रे आश्रयाद्बहिर्भवतः। अतश्च सान्त-राधिकयोर्ग्रहणमुपपद्यते चेत्। तदपि न युज्यते। कुतः। अधिष्ठानादित्यादि ॥

*Ṭīkā.*

V.T.—gaṅ gi phyir mig daṅ rna ba'i rnam par śes pa dag kyaṅ mṅon sum ñid du 'dod de। de dag la yaṅ phrad pa la 'byuṅ ba mi srid do। de mi srid par ston pa gsuṅs pa। bar daṅ bcas pa 'dsin pa zhes pa'o। lhag par 'dsin pa ni dbaṅ po dan bral par 'dsin pa'o॥

चक्षुःश्रोत्रविज्ञानयोरपि यस्मात् प्रत्यक्षत्वमिष्यते तयोश्च सन्निकर्षजत्वं न संभवति। तदसंभवदर्शनार्थमाह सान्तरग्रहणमिति । सान्तरग्रहणं विच्छिन्नग्रहणं अधिकग्रहणं इन्द्रियासम्बद्धग्रहणमिति ॥

bde sogs gzhal bya min pa 'am।
dbaṅ po gzhan yod yid dbaṅ po॥
bkag pa mid phyir thob ce na।
dbaṅ po gzhan gyi sgra don med॥ 21 ॥

न सुखादि प्रमेयं वा मनो वास्तीन्द्रियान्तरम् ।
अनिषेधादुपात्तं चेदन्येन्द्रियरुतं वृथा ॥ २१ ॥

*Notes.*

Cf. NVTT., p. 97.—भाष्ये चात्मादिषु सुखादिष्विति नित्यानित्याभिप्रायं वर्गद्वयमात्मसुखदुःखत्वादयो नित्यानित्याश्च सुखदुःखादय इति। तदिदमुक्तं दिङ्नागेन ॥

'न सुखादि प्रमेयं वा मनो वास्तीन्द्रियान्तरम्।'

न च तत्संभवति। घ्राणादि सूत्रेण विभागपरेण निषेधादिति भावः॥

मनसश्चेत्यादि भाष्यं व्याख्यातं तद्दूषितं दिङ्नागेनः॥

'अनिषेधादुपात्तं चेदन्येन्द्रिय रुतं वृथा॥'

Cf. NV., p. 39.—तन्त्रान्तरसमाचाराच्च। तन्त्रान्तरे मन इन्द्रियमिति पठ्यते। तच्चेह न प्रतिषिध्यते। अप्रतिषेधादुपात्तं तदिति? न। शेषाभिधानवैयर्थ्यात्॥

अनिषेधादिति। अथ मतान्तरानिषेधेन सिद्धस्य मनसः इन्द्रियत्वाप्रतिषेधादुपात्तं तदिति चेत्। अन्येन्द्रियेत्यादि। यदि परेण पठितस्य मनसः अप्रतिषेधादिन्द्रियत्वं श्रोत्रादीनि इन्द्रियाणीति यदुक्तं तद्वृथा॥

*Tīkā.*

V.T., folio 59.—lṅa po rnams dbaṅ po ñid na ces pa। sna daṅ lce daṅ mig daṅ pags pa daṅ rna ba rnams dbaṅ po rnams so zhes pa'i mdo las so। dbe sogs gzhal bya min pa 'am zhes pas mtshan ñid ma tsaṅ ba ñid gsuṅs so। bde ba la sogs pa śes pa mṅon sum gyi mtshan ñid kyis ma bsdus pa'i phyir ro। de laṣ kyaṅ bde ba la sogs pa rnams gzhal bya ñid du khas len pa 'gal ba'o॥

पञ्चैवेन्द्रियाणि । 'घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणी' ति सूत्रात् । न सुखादि प्रमेयं वेति लक्षणस्य न्यूनतामाह । सुखादिज्ञानस्य प्रत्यक्षलक्षणेनासंग्रहात् । तेन च सुखादेः प्रमेयत्वे अभ्युपगमविरोधः ॥

yaṅ na dbaṅ po gzhan yid yid । ces pa gal te skyon 'di 'dod pa ma yin no zhes pa dgoṅs pa'o । de ltar na yaṅ dbaṅ po lnar khas blaṅs pa la gnod do ॥

अथवा अस्ति इन्द्रियान्तरं मन इति यदि दोषोऽयं नेच्छतीति अभिप्रायः पञ्चेन्द्रियत्वाभ्युपगमबाधः ॥

bkag pa med phyir ces pa 'dis bstan bcos su yid dbaṅ po ñid 'dod pa kho na'o zhes ston te ॥

अनिषेधादित्यनेन शास्त्रे मनसः इन्द्रियत्वमिष्टमेवेति ॥

sna la sogs pa rnams kyi dbaṅ po ñid du de kho na las grub pa ñid kyi phyir । de'i tshig don med pa ñid du 'gyur ro ॥

अन्येन्द्रियरुतं वृथा—

घ्राणादीनामिन्द्रियत्वं तेनैव सिद्धमिति तद्वचनं वृथा ॥

[1]don ṅes bras bu yod min pa ।
de [2]khyad par min tha dad phyir ॥
de la yod min gñis zhe na ।
ma yin khyad par bya la'an 'gyur ॥ 22 ॥

---

[1] PS. ṅes pa'i don la 'bras bu med.
[2] PS. khyad par la min.

न फलं निश्चयोऽर्थस्य न भेदात्तद्विशेषणम् ।
तत्र नास्ति द्वयं चेच्च विशेष्येऽपि प्रसज्यते ॥२२॥

*Vṛitti*

ṅes pa'i bdag ñid can gyi śes pa ni tshad ma ste । 'bras bu med par 'gyur ro ॥

निश्चयात्मकं ज्ञानं प्रमाणफलं न भवति ॥

gal te khyad par du byed pa'i śes pa tshad ma yin te । gaṅ spyi la sogs pa khyad par du byed pa'i śes pa de ni tshad ma yin la gaṅ rdsas la sogs pa khyad par du bya ba ni śes pa de ni 'bras bu yin no zhe na ॥

ननु विशेषणज्ञानं प्रमाणं । यत्सामान्यादिविशेषणज्ञानं तत्प्रमाणं । द्रव्यादिविशेष्यज्ञानं यत् तत्फलं चेत् । न । भेदात् ॥

ci ste yaṅ khyad par du byed pa'i śes pa ñid tshad ma daṅ gzhal bya gñis kar yaṅ 'gyur te । . . . । khyad par du bya ba'i śes pa 'aṅ tshad ma daṅ gzhal bya gñis kar 'thob par 'gyur ro ॥

अथ विशेषणज्ञानमेव प्रमाणप्रमेयमुभयं भवतीति चेत् । न । विशेष्यज्ञानस्यापि प्रमाणप्रमेयोभयत्वप्रसङ्गः ॥

*Ṭīkā.*

V.T., folio 59 *b*—ṅes pa'i bdag ñid can ni zhes pa la sogs pa la । gaṅ ma ṅes pa'i pa 'bras bu don gzhan du 'gyur gyi । zhen pa'i bdag ñid tshad mar 'dod pa'i gzhan 'bras bar 'gyur ni ma yin no । de ltar 'bras bu don gzhan du khas blaṅs pa 'gal lo ॥

khyad par gyi śes pa la sogs pas gal te yaṅ ṅes pa'i bdag ñid du tha dad pa med pa de lta na yaṅ 'yul tha dad pas śes pa tha dad pa'i phyir tshad ma las 'bras bu tha dad du ston te ॥

निश्चयात्मकमित्यादि । यस्य अनिश्चयात्मकं प्रमाणमभिमतं तस्य फलमर्थान्तरं भवति। तस्य व्यवसायात्मकं प्रमाणं यस्य फलमन्यत् न भवति । तथा च अर्थान्तरफलत्वाभ्युपगमविरोधः ॥

विशेषणज्ञानमित्यादि । यद्यपि निश्चयात्मकत्वेन न भिद्यते। तथापि विषयभेदेन ज्ञानभेदात्प्रमाणात्फलं भिद्यते एव ॥

*Notes.*

1. Cf. SVK., pp. 234-237.
2. Cf. NR., p. 156 ff.
3. Cf. SVK., p. 234 ff.—सर्वसविकल्पकज्ञानानि विशेषणज्ञानपूर्वकाणि यथा दण्डयं गौरियं शुक्लोऽयं

गच्छत्ययं डित्थोऽयमिति। तदिह विशेषणज्ञानं प्रमाणं विशेष्यज्ञानं च फलम्। विशेष्यज्ञानसिद्ध्यर्थत्वात् विशेषणज्ञानस्य ॥

विशेष्यज्ञान इदानीं का वार्ता। न तावदप्रामाण्यं। सर्वत्र प्रसङ्गात्। न चासति फले प्रमाणत्वमपि शक्यं समर्थयितुम्। अथ तदेव प्रमाणं फलं चेति द्विरूपमिष्यते। अस्तु तर्हि विशेषणज्ञानादिष्वपि द्विरूपत्वमेव। किं भेदोपन्यासेन ॥

ma rtogs la sogs kun la min ।
ldog pa 'bras bur yod ma yin ॥ 23 ॥

अज्ञानादेर्न सर्वत्र व्यवच्छेदः फलं न सत् ॥ २३ ॥

*Tīkā.*

V.T., folio 61 *a.*—ji ltar sgron ma'i mun pa bzlog pa'i 'bras bu don gzhan yin pa de bzhin du mi śes pa la sogs pa bzlog pa 'bras bur 'gyur ro zhes ston to । yul gyi dbye ba yaṅ 'di la med do zhes pa ñe bar dgod pa'o ॥

kun la miṇ zhes pas 'bras bu rnam par bzhag pa'i ma khyab pa ñid gsuṅs so । gaṅ la gaṅ gi rtsom la tsam gyis śes pa skye ba de la de'i mi śes pa yod pa ma yin te ॥

khyad byed daṅ 'gal ba gsuṅs so । ldog pa yod min 'bras bu min ces pa la । mi śes pa la sogs pa ldog pa ste । dṅos po med pa la ni bya ba cuṅ zad kyaṅ yod pa ma yin te । gaṅ yod pa ma yin pa de tshad ma'i 'bras bu ma yin te । śin tu med pa bzhin । ldog pa yaṅ yod pa ma yin pa'o ॥

sgron ma'i yaṅ mun pa ldog pa tsam 'bras bu ma yin te । o' na kyaṅ bum pa la sogs pa gsal bar byed pa'o । de'i phyir de'i gnas skabs ni tshad ma daṅ 'bras bu med pa'i skyon no zhes pa'o ॥

यथा प्रदीपस्य अन्धकारनिवृत्तिरूपं फलमर्थान्तरं एवं अज्ञाननिवृत्तिरूपं फलं भवेत् । विषयभेदोप्यत्र नास्तीत्युपहासः ॥

न सर्वत्रेति फलव्यवस्थायां अव्याप्तिमाह । यत्र यस्य प्रयत्नमात्रेण ज्ञानमुत्पद्यते तत्र तस्य अज्ञानमेव नास्ति ॥

व्यापकविरोधमाह—व्यावृत्तिः फलं न सदिति । अज्ञानाद्यभाव एव अज्ञाननिवृत्तिः । अभावे न कोऽपि व्यापारो विद्यते । यदसत् तत्प्रमाणफलं न भवति । यथा अत्यन्तासत् । व्यावृत्तिरप्यसत् । प्रदीपस्य च अज्ञानादि-

निवृत्तिमात्रं फलं नास्ति । किं तु घटादिव्यञ्जकम् । तस्मात्प्रमाणफलाभावदोषस्तदवस्थ एव ॥

bye brag pa rnams kyi mdo las bdag daṅ po daṅ don du phrad pa las gaṅ grub pa de gzhan yin no zhes zer ro ॥

वैशेषिकसूत्रे—

आत्मेन्द्रियमनोऽर्थसंनिकर्षात् यन्निष्पद्यते तदन्यदिति ॥

Cf. VS., III, i, 18.

spyi daṅ khyad par la bltos pa daṅ rdsas daṅ yon tan daṅ las la bltos pa ni mṅon sum mo zhes ni sbyor mi bya ste ॥

सामान्यविशेषापेक्षं द्रव्यगुणकर्मापेक्षं च प्रत्यक्षमिति न युज्यते ॥

Cf. VS., VIII, 1, 6.

*Notes.*

Cf. VB., p. 42.—सामान्यविशेषद्रव्यगुणकर्मविशेषणापेक्षादात्ममनःसंनिकर्षात् प्रत्यक्षमुत्पद्यते सद्द्रव्यं पृथिवी विषाणी शुक्ला गौर्गच्छतीति ॥

Cf. NM., pp. 108-109—यदपि कैश्चित् प्रत्यक्ष-लक्षणमुक्तम्। आत्मेन्द्रियमनोऽर्थसन्निकर्षात् यदुत्पद्यते ज्ञानं तदन्यदनुमानादिभ्यः प्रत्यक्षमिति। तदपि त्रयद्वय-सन्निकर्षजन्मनां सुखात्मादिज्ञानानां अव्यापकमतिव्या-पकं च व्यभिचार्यादिबोधानामित्युपेक्षणीयम् ॥

yul la lta ba'i don can phyir ।
khyad pa rnams dan sbyor mi byed ॥ 24 ॥

विषयेक्षणार्थकत्वात् विशेषैर्न हि युज्यते ॥ २४ ॥

*Vṛitti.*

dban po'i blo rnams ni ran gi don tsam 'dsin par byed pa'i phyir । khyad par rnams dan lhan cig tu sbyor ba ni mi 'thad do ॥

इन्द्रियवृत्तीनां स्वार्थमात्रग्राहकत्वात् विशेषैस्सह योगो नोपपद्यते ॥

*Tīkā.*

V.T., folio 65 f.—bstan bcos su brjod pa ni spyi dan khyad par la bltos pa ni rdsas dan yon tan dan las rnams la mṅon sum ste rdsas dan yon tan dan las la bltos pa yan rdsas rnams la'o zhes pa ste ॥

शास्त्रे चोक्तम्—

सामान्यविशेषापेक्षं द्रव्यगुणकर्मसु । द्रव्येषु द्रव्य-गुणकर्मापेक्षं च प्रत्यक्षमिति ॥

Cf. VS.—VIII, i, 6 and 7.

*Ibid.*—'dir spyi smos pas spyi chen po yod pa ñid gzuṅ bar bya zhiṅ khyad par smos pas rdsas ñid la sogs spyi lhag ma rnams te । spyi daṅ khyad par zhes pa 'di yaṅ bltos nas byas pa ste । de'i phyir spyi 'di rnams ni khyad par gyi sgras brjod par bya ba rnams so । yod pa ñid ni spyi kho na ste khyad par ma yin la । lhag ma rnams ni spyi rnams daṅ khyad par rnams su yaṅ bltos pa nas 'gyur ro । de la spyi la bltos pa ni rdsas la yod po ni rdsas so zhes pa'o । khyad par la bltos pa ni rdsas ni sa'o bum pa'o zhes pa la sogs pa'o । rdsas daṅ yon tan daṅ las la bltos pa ni । dbyug pa can । dkar po । 'dro'o zhes pa'o ॥

अत्र सामान्यशब्देन महासत्ता ग्राह्या । विशेषशब्देन अन्ये द्रव्यत्वादिसामान्याः । सामान्यविशेषाश्च अपेक्षा-कृताः । तस्मात् एते सामान्या विशेषशब्दवाच्याः । सत्ता सामान्यमेव, न विशेषः । शेषास्तु अपेक्षातः सामान्या विशेषाश्च । तत्र सामान्यापेक्षं द्रव्यं सत् द्रव्यमिति ।

विशेषापेक्षं द्रव्यं घट इत्यादि। द्रव्यगुणकर्मापेक्षं दण्डी शुक्लो गच्छतीति ॥

*Ibid.*, folio 65.—raṅ gi don tsam 'dsin pa ñid kyi phyir zhes pa 'di । yul la lta don can ñid kyi phyir zhes pa 'di ni rnam par 'grel pa'o ॥

स्वार्थमात्रग्राहकत्वादिति विषयदर्शनार्थकत्वादित्यस्य विवरणम् ॥

gcig min gzugs sogs gcig tu gyur ।
mthoṅ na dbaṅ po pas[1] de min ॥
[2]dbaṅ po du ma don med phyir ।
raṅ yul tha dad kyaṅ 'dsin nus ॥ 25 ॥

नैकं रूपाद्यभेदो वा दृष्टं चेन्द्रियेण तत् ।
अक्षाऽनेकत्ववैयर्थ्यात् स्वार्थभिन्नेऽपि शक्तिमत् ॥ २५ ॥

*Vṛitti.*

gal te yaṅ rdsas gcig pa dban po du ma'i gzuṅ bya yin zhe na । de lta na ni gcig min te gzugs pa la sogs pa bzhin du du mar ro । gal te dbaṅ po du ma'i gzuṅ bya yin kyaṅ tha mi dad par 'dod na । gzugs la sogs pa yaṅ rdsas bzhin gcig ñid du 'gyur ro ॥

[1] V[1], V[2] las.
[2] V[1], V[2] dban gzhan don med 'gyur phyir ro.

यदि द्रव्यमेकमनेकेन्द्रियग्राह्यं, नैकं। रूपादिवदनेकं। यदि सत्यपि अनेकेन्द्रियग्राह्यो न भिद्यते, रूपादिकं च द्रव्यवदेकमेव स्यात्॥

*Notes.*

1. Cf. NR., p. 183 ff.

2. Cf. SVK., p. 265 ff.—नन्वेवं कायचक्षुर्गोचरो धर्मी भिद्यते ग्राहकभेदाद् रूपादिवत्। तानि वा तद्वदेव सत्यपि ग्राहकभेदे न भिद्येरन् अनेकेन्द्रियग्राह्यमेकं सद्दृष्टं सत्त्वमिति चेत्, न। विकल्परूपस्येन्द्रियेणाग्रहणात्। अपिचेन्द्रियाणां सङ्कीर्णविषयत्वे अक्षानेकत्ववैयर्थ्यमपि। एकमेव हि तदिन्द्रियं नानाविषयान् परिच्छेत्स्यतीति किमिन्द्रियभेदेन। तदुक्तं

नैकं रूपाद्यभेदो वा दृष्टं चैकेन्द्रियेण तत्।
अक्षानेकत्ववैयर्थ्यं स्वार्थे भिन्नेऽपि शक्तिमत्॥ इति।

*Tīkā.*

3. V.T., folio 66.—gaṅ dbaṅ po gcig min gyis gzuṅ bar bya ba de'i ni gcig ma yin te। gzugs la sogs pa bzhin। rdsas kyaṅ de lta bu'o zhes khyab byed daṅ 'gal ba'i thal 'gyur ro। rdsas dbaṅ po gcig min gyi gzuṅ par bya ba ñid ni। blta bar bya ba daṅ reg par bya ba yaṅ rdsas zhes khas blaṅs pa'i phyir ro॥

यदैकेन्द्रियग्राह्यं तदेकं यथा रूपादिकम्। द्रव्यमपि तथा इति व्यापकविरोधो प्रसज्यते। द्रव्यं च नैकेन्द्रियग्राह्यमेव। दृश्यं स्पृश्यं च द्रव्यमित्यभ्युपगमात्॥

gzugs sogs dbyer med pa 'am zhes pas 'di ṡkad ston te। gzugs la sogs pa la yaṅ tha dad par rnam par 'jog pa'i rgyu ni dbaṅ po gcig min gyis gzuṅ par bya ba ñid de। gal te rdsas la tha dad pa 'dod pa ma yin na gzugs la sogs pa rnams la yaṅ der ni 'gyur ro zhes pa'o॥

रूपाद्यभेदोपेत्यनेन रूपादिषु भेदव्यवस्थापकं नैकेन्द्रियग्राह्यत्वमेव। यदि च द्रव्यभेदो नेष्यते रूपादिषु च भेदो न स्यादिति॥

'dsin byed tha dad pa la gzugs la sogs pa rnams kyi gcig ma yin pa ñid du rnam par bzhag go zhe na। 'gyur med। de las kyaṅ kho bo cag gis dbaṅ po tha dad pa'i gzuṅ bya ñid kho na'i phyir tha dad pa'o zhes ṅes par gzuṅ pa ma yin no॥

gzhan yaṅ dbaṅ po tha dad pa ñid kyi gzuṅ bar bya ba ñid kyis 'dsin byed tha dad pa yaṅ 'phaṅs pa kho na ste। dbaṅ po tha dad pa'i gzuṅ bar bya ba ñid na। gdon mi za bar 'dsin byed tha dad par 'gyur bar 'os so॥

ग्राहकानन्यत्वात् रूपादेर्नैकत्वव्यवस्था चेत् । सत्यम् । ततोऽपि अनेकेन्द्रियग्राह्यत्वादेव नानात्वमित्यस्माभिर्नोक्तम् ॥

किं च अनेकेन्द्रियग्राह्यत्वात् ग्राहकभेदोऽपि आक्षिप्यत एव । यदि अनेकेन्द्रियग्राह्यत्वं स्यादवश्यं ग्राहकभेदोऽपीति ॥

mthoṅ zhe na zhes pa la sogs pas rdsas kyi gcig ñid ni mṅon sum gyis grub la gzugs la sogs pa yaṅ gcig ma yin pa ñid du'o ॥

दृष्टं चेदित्यादिना द्रव्यस्यैकत्वं प्रत्यक्षसिद्धं रूपादीनां च अनेकत्वमिति ॥

yod pa ñid daṅ yon tan ñid dag gi rten gzugs la sogs pa rnams ni dbaṅ po thams cad pa can rnams te । de'i phyir de dag kyaṅ dbaṅ po thams cad pa ñid do । tha mi dad pa'i śes pa ni slar yaṅ gaṅ kho na bdag gis mthoṅ ba de kho na reg go zhes pa ste । de dbaṅ pos min zhes pa lan no ॥

अनेकेन्द्रियग्राह्याश्च सत्त्वगुणत्वाश्रिता रूपादयः । तस्मात् सत्त्वगुणत्वेऽप्यनेकेन्द्रियग्राह्ये । अभेदग्रहस्तु यदेव पूर्वं मया दृष्टं तदेवाद्य स्पृशामीति । तच्चेन्द्रियान्न भवतीत्युत्तरम् ॥

dbaṅ po du ma don med phyir ces pa dbaṅ po du ma brtag pa la rgyu mtshan med pa ñid kyi phyir ces pa'i don te । dbaṅ po gcig gis don du ma mthoṅ dag rtog par nus pa ma yin no zhes pas dbaṅ po gzhan yoṅs su rtog pa yin no । gal te yaṅ dbaṅ po gzhan gyi don la yaṅ rab tu 'jug na dbaṅ po du ma brtag pa rgyu mtshan med par 'gyur ro ॥

एकेनैवेन्द्रियेण अनेकार्थदर्शनकल्पना न युक्तेतीन्द्रियान्तरकल्पना । यदि चेन्द्रियान्तरार्थेऽपि प्रवृत्तिरेकस्य अनेकेन्द्रियकल्पनायां निमित्तमेव नास्तीति ॥

dbaṅ po du mas don gcig ·yoṅs su gcod par nus la । gcig gis don du ma ma yin zhiṅ । gzugs la sogs pa yaṅ du ma rnams te । de'i phyir dbaṅ po maṅ po ñid rtags pa don daṅ bral ba ñid med do ce na । raṅ yul tha dad na 'an zhes pa la sogs pa ste ॥

एकोऽर्थः अनेकेन्द्रियैः परिच्छेत्तुं शक्यः । अर्थास्त्वनेके नैकेन । रूपादयस्त्वनेके । तस्मादनेकेन्द्रियकल्पना व्यर्था न भवतीति चेत्—स्वार्थभिन्नेपीत्यादि ॥

dbaṅ po kun gyis 'dsin par 'gyur

अनेकेन्द्रियग्राह्यं स्यात्—

*Vṛitti.*

gaṅ yaṅ don tha mi dad pa la yaṅ dbaṅ po du mas 'dsin par 'gyur। gzugs la sogs pa so so la yaṅ dbaṅ po kun gyis 'dsin par 'gyur। de rdsas la sogs pa yaṅ dbaṅ po gcig gis gzuṅ bya ma yin par 'gyur ॥

कचिदभिन्ना अप्यर्थाः अनेकेन्द्रियग्राह्याः। रूपादिकं च प्रत्येकं द्रव्यादिवदनेकेन्द्रियग्राह्यं स्यात्। एवं द्रव्यादिकमेकेन्द्रियग्राह्यं न स्यात् ॥

rdsas sogs la min de lta na।
gzhan gyi spyod yul ji ltar yin ॥ 26 ॥

द्रव्यादिषु न चेदेवं कथं स्यादन्यगोचरः ॥ २६ ॥

*Vṛitti.*

rdsas daṅ graṅs la sogs pa daṅ las rnams la gzugs ñid daṅ reg bya daṅ med par 'dod pa'i phyir mig daṅ reg pa dag gis de dag 'dsin par mi 'gyur de lta na ni gzugs la sogs med pa'i phyir ro। rdsas la sogs pa la ṅes pa med par 'gyur ro zhe na। de lta na ni mdo daṅ 'gal te de med pa'i phyir mi 'khrul lo ॥

द्रव्यसंख्यादिकर्मसु रूपस्पर्शयोरभावस्येष्टत्वाद् दर्शनस्पर्शनाभ्यां ते न गृह्यन्ते। एवं रूपाद्यभावात् द्रव्यादि-

निश्चयो न स्यादिति चेत् सूत्रविरोधः—"तद्भावादव्यभिचार" इति ॥ [Cf. VS., IV, i, 10].

gal te 'di ltar rdsas la sogs pa la tha mi dad par 'dsin pa mthoṅ ba de ji lta zhe na । mig ni reg bya ba dag las tha dad pa'i yul la dmigs pa ste । gzhan ñid daṅ lhaṅ cig rgyu ba'i spyi'i yul la tha mi dad du 'dsin pa'i dran pa'i śes pa skyes pa yin gyi ॥

यद्येवं द्रव्यादिष्वभेदग्रहणं दृष्टं तत्कथमिति चेत्। दर्शनस्पर्शनाभ्यां अनेकार्थनिश्चयः। भेदसहचरितविषयाभेदसामान्यग्राहकं स्मरणात्मकं ज्ञानमुत्पद्यते ॥

*Tīkā.*

V.T., folio 68 *b.*—rdsas las gzhan pa brtags pa kho na 'di'i yul lo zhes ston te ॥

द्रव्यादन्यः कल्पनात्मक एवास्य विषय इत्युपदिशति ॥

spyod yul mtshuṅs ñid 'dod ce na ।
mi 'dod pa la'aṅ thal bar 'gyur ॥
ma ṅes de ni gzhan brjod do ।
thams cad brgrub par brlod ma yin ॥ 27 ॥

गोचरसाम्यमिष्टंचेदनिष्टं च प्रसज्यते ।
नान्यथोक्तमनैकान्तं सर्वसिद्धिस्तु नोच्यते ॥ २७ ॥

*Vṛitti.*

khyad par du byed pa daṅ khyad par du bya ba dag ni dbaṅ po'i yul du mtshuṅs par khas blaṅs par bya ste । de las kyaṅ gzugs la sogs pa khyad par can rnams dbaṅ po thams cad pa ñid kyi phyir de'i khyad par yod pa ñid daṅ yon tan ñid dag dbaṅ yo thams cad pa ṅid du grub po । gaṅ khyad par can du gyur pa de rnams dbaṅ po mtshams pa'i yul yin te ॥

विशेषणविशेष्ययोः समानेन्द्रियविषयत्वमभ्युपगम्यते । ततश्च रूपादिविशेष्याणां अनेकेन्द्रियग्राह्यत्वात् तद्विशेषणसत्त्वगुणत्वादीनां अनेकेन्द्रियग्राह्यत्वं सिद्ध्यति । यत्र विशेष्यविशेषणभावः तत्र समानेन्द्रियगोचरत्वं ॥

dbaṅ po tha dad kyi gzuṅ bya ba yin pa'i phyir zhes pas ni du ma ñid du brjod pa yin gyi । dbaṅ po gcig gi gzuṅ bya yin pa'i phyir gcig tu ma yin na gaṅ las ṅes par 'gyur ro dbaṅ po tha dad kyi gzuṅ bya yin pa kho nas du ma ñid brjod pa ni ma yin gyi । 'on kyaṅ du ma ñid kho na'i zhes brjod pa'i phyir ma ṅes pa ma yin no ॥

अनेकेन्द्रियग्राह्यत्वादित्यनेन अनेकत्वमुच्यते । एकेन्द्रियग्राह्यत्वात् यदि नैकत्वं, कुतो नियमः । अनेकेन्द्रिय-

ग्राह्यत्वात् न नानात्वमुक्तम्। अपि तु नानात्वस्यैवेति वचनादनैकान्तो नास्ति ॥

du ma thams cad dbaṅ po tha dad pa las yin no zhes smras pa ni ma yin gyi । 'on kyaṅ gaṅ du dbaṅ po tha dad pa de du ma'o zhes smras pa yin no । blo tha dad pa yaṅ du ma ñid kyi rgyu yin ॥

सर्वत्र नानात्वं इन्द्रियनानात्वाद्भवतीति नोच्यते। किं तु यत्र इन्द्रियभेदः तत्र नाना इति। बुद्धिभेदोऽपि नानात्वकारणं भवति ॥

*Ṭīkā.*

V.T., folio 69 *b.*—spyod yul mtshuṅs ñid 'dod ce na zhes pa ma ṅes pa ñid gzhuṅ gzugs pa'i ched du ñe bar bkod pa'o । spyod yul mtshuṅs ba ñid la gtan tshigs smas pa । de mi 'dsin na de'i blo med pa'i phyir ro zhes pa khyad par byed pa ma bzuṅ bas khyad par can la blo 'jug pa ma yin no zhes pa'i don to । de las kyaṅ gzugs la sogs pa khyad par can rnams dbaṅ po thams cad pa ñid kyi phyir de'i khyad par yod pa ñid daṅ yon tan ñid dag dbaṅ po thams cad pa ñid du grub bo । gaṅ khyad par daṅ khyad par can du gyur pa de rnams dbaṅ po mtshuṅs pa'i yul yin te । dper na dbyug pa

daṅ dbyug pa can bzhin ı yod pa ñid daṅ de daṅ ldan pa rnams daṅ ı yon daṅ de daṅ ldan pa rnams kyaṅ de lta bu'o ı raṅ bzhin gyi gzugs brñan no ‖

अनैकान्तत्वनिरूपणार्थमुपन्यस्यति गोचरसाम्यमिष्टं-चेदिति। गोचरतुल्यत्वं हेतुः। तदग्रहे तद्बुद्ध्यभावादिति विशेषणाग्रहणाद्विशेष्यबुद्धिरपि नास्तीत्यर्थः। तस्माच्च रूपादिविशेष्याणामनेकेन्द्रियग्राह्यत्वात्तद्विशेषणसत्तागुण-त्वयोरपि अनेकेन्द्रियत्वं सिद्ध्यति। ये विशेष्यविशेषण-भूतास्ते तुल्येन्द्रियगोचराः यथा दण्डदण्डी। सत्ता-सत्तावन्तः। गुणगुणिनश्च। सदृशास्वभावा इति ‖

mi 'dod pa la thal bar 'gyur zhes pa thal 'gyur gyi zol gyis ma ṅes pa ñid du gsuṅs so ı rdsas daṅ ldan pa rnams zhes pa la sogs pa ste ı 'dir rdsas daṅ ldan pas yon tan ni khyad par can te ı rdsas ni khyad par ro ı de las kyaṅ ji ltar yon tan dbaṅ po lṅa yin 'di bzhin du rdsas kyaṅ 'gyur ro ı de bzhin du rdsas gcig pa ñid kyi phyir zhes pa la sogs pa ste ı rdsas ni rdsas med pa daṅ ı rdsas du mar 'dod par bya'o ı rdsas gcig pa ni rdsas ma yin no ı de la rdsas med pa'i rdsas ni gaṅ la rdsas gzhan gyi rten med pa ste ı dper na rdul phra rab daṅ nam kh'a la sogs pa bzhin no ı rdsas du ma'i rdsas

ni gaṅ la rdsas du ma'i rten can te । dper na bum pa lta bu'o । 'dir yaṅ rdsas gcing ni yod pa dbaṅ po thams cad pa'i khyad par ro zhes pas rdsas kyaṅ dbaṅ po thams cad par 'gyur la । 'dod pa yaṅ ma yin । de'i phyir ma ṅes pa'o ॥

अनिष्टं च प्रसज्यत इति प्रसङ्गव्याजेन अनैकान्तत्वमाह द्रव्यवन्त इत्यादि । द्रव्यवति गुणो विशेषणः द्रव्यं विशेष्यं । तेन च यथा गुणः पञ्चेन्द्रियैर्गृह्यते तथा द्रव्यमपि स्यात् । एवमेकद्रव्यत्वादिति । द्रव्यमद्रव्यमनेकद्रव्यं च । एकद्रव्यमद्रव्यम् । यत्र अद्रव्यद्रव्यं तत्र द्रव्यान्तरं नास्ति । यथा परमाण्वाकाशौ, अनेकद्रव्यद्रव्यंत्वनेकाश्रितं, यथा घटः । अत्र एकद्रव्यात्मिका विशेषणरूपा सत्ता अनेकेन्द्रियग्राह्या नेष्यते । तस्मादनैकान्तम् । तथा द्रव्यमप्यनेकेन्द्रियग्राह्यं स्यात् ॥

V.T., folio 70 *b* ff.—raṅ gi rten can ni । yon tan daṅ las dag gi raṅ gi spyi ste । yon tan kun daṅ las ñid do । gaṅ gi rten raṅ ñid yin pa de raṅ gi rten can te । de daṅ 'brel ba'i sgo nas skye'o zhes pa ni 'di daṅ lhan cig 'brel pa ste । khyad par daṅ 'brel pa'i sgo nas skye'o zhes pa ji srid pa'o । de'i phyir yaṅ gal khyad par la bltos pa de mṅon sum ma yin zhes pa la sogs pa sña ma bzhin du sgrub byed brjod par bya'o ॥

स्वाश्रयिनौ गुणकर्मणोः स्वसामान्ये। यस्याश्रयः स्व एव भवति स स्वाश्रयी। तत्सम्बन्धद्वारा उत्पद्यत इत्यनेन सह सम्बध्यते। विशेषणसम्बन्धमुखेनोत्पद्यत इति कथम्। तस्मादपि यद्विशेषणापेक्षं तत्प्रत्यक्षं न भवतीत्यादि पूर्ववत्साधनं वाच्यम्॥

*Ibid.*, folio 71 *a.*—gzhan yaṅ de yaṅ bzhi po la sogs pa phrad pa kho na las skye ba'o zhes pa 'di bstan pa'o ı sogs pa'i sgras gsum 'dus pa las daṅ gñis 'dus pa las kyaṅ ji ltar srid par ro I de las skyon ci yod ce na gsuṅs pa I ji ltar thams cad du zhes pa la sogs pa ste ı de la bzhi po phrad pa las ni bdag daṅ yin daṅ bdaṅ po daṅ rdsas phrad pa las gzugs la sogs pa rnams la daṅ las rnams la'o ı gsum 'dus pa las sgra la'o ı de la rdsas daṅ lhan cig dbaṅ po 'brel pa yod pa ma yin te ı nam kha la thos pa ñid kyi phyir daṅ ı de kho na la sgra 'du ba ean yin pa'i phyir ro I gñis phrad pa las ni bdag daṅ ari phrad pa las bde ba la sogs pa rnams la'o ı de ltar na yon tan daṅ las daṅ raṅ ñid daṅ phrad pa rnams las śes pa 'grub pa'i phyir ı rdsas ni rgyu daṅ rgyu'i yaṅ ṅo zhes gaṅ brjod pa des yaṅ sun phyuṅ ba yin no zhes pa'o ıı

किं च तदपि चतुष्टयसन्निकर्षादेवोत्पद्यत इत्यत्रोक्तम् । आदिशब्देन त्रितयाद्द्वितयादपि यथासम्भवं भवतीति । तस्मात्को दोष इति चेदाह । यथा सर्वत्रेत्यादि । तत्र चतुष्टयसन्निकर्षादात्ममनइन्द्रियार्थसन्निकर्षाद्रूपादीनां कर्मणां च । त्रितयाच्छब्दस्य । तत्र द्रव्येण सहेन्द्रियस्य सम्बन्धो नास्ति । आकाशस्य श्रोत्रत्वात् । तस्यैव शब्दसमवेतत्वात् । द्वितयसन्निकर्षादात्ममनस्सन्निकर्षात् सुखादीनां । एवं गुणकर्मात्मसन्निकर्षैर्ज्ञानमुत्पद्यत इति द्रव्यकारणकारणं चेति यदुक्तं तेनाप्यपक्षिप्तमिति ॥

ser skya ba rnams rna ba la sogs pa'i 'jug pa ni mṅon sum du 'dod do ॥

कापिलास्तु श्रोत्रादिवृत्तेः प्रत्यक्षत्वमिच्छन्ति ॥

*Vṛitti.*

ran ba daṅ bgas pa daṅ mig daṅ lca daṅ sna rnams yid kyi byin gyis brlabs nas sgra daṅ reg bya daṅ gzugs pa daṅ ro daṅ dri rnams la go rim ji lta ba bzin du 'dsin pa la 'jug pa ni mṅon sum gyi tshad ma'o zhes zher ro ॥

श्रोत्रत्वगक्षिजिह्वाघ्राणानां मनोऽधिष्ठानेन यथाक्रमं शब्दस्पर्शरूपरसगन्धानां ग्रहणे वृत्तिः प्रत्यक्षं प्रमाणमित्याहुः ॥

*Tīkā.*

V.T., folio 71 *a.*—ci rjes su dpag pa gcig tu kho na tshad ma 'am zhe na । ma yin zhes brjod par bya ste । rna ba la sogs pa'i 'jug pa yaṅ ṅo । mṅon sum tshad ma zhes pa lhag ma'o ॥

yid kyis zhes pa yid kyi 'jug pa ste । raṅ bzhin daṅ rnam 'gyur dag tha dad med par ñe bar btags pa las de skad du bśad do । byin gyis brlabs pa zhes pa de daṅ lhan cig yul gcig la zhugs pa zhes pa'i don to ॥

अथानुमानमेकमेव वा प्रमाणम्। नेत्याह श्रोत्रादिवृत्तिरपि । प्रत्यक्षं प्रमाणमिति शेषः ॥

चित्तेनेति चित्तवृत्तिना । स्वभावविकारयोरभेदोपचारेणैवमुक्तम्। अधिष्ठानमिति तेन सहैकस्मिन् विषये वर्तत इत्यर्थः ॥

*Notes.*

Cf. NV., p. 43.—तथा श्रोत्रादिवृत्तिरिति । किं कारणम्? पञ्चपदपरिग्रहेण प्रत्यक्षलक्षणमुक्तं यत्रान्यतरपदपरिग्रहो नास्ति तत्प्रत्यक्षाभासम् ॥

Cf. NVTT., p. 103.—वार्षगण्यस्यापि लक्षणमयुक्तमित्याह—श्रोत्रादिवृत्तिरिति ॥

Cf. NM., p. 100.—श्रोत्रादिवृत्तिरविकल्पिकेति प्रत्यक्षलक्षणमवर्णि तदप्यपास्तम् ॥

Cf. STP.—श्रोत्रादिवृत्तिरविकल्पिकेति विन्ध्यवासि प्रत्यक्षलक्षणमनेनैव निरस्तम् ॥

thug pa med pa'aṅ dbaṅ gcig 'gyur ।
gñis gzuṅ gsum gyi spyod yul min ॥
yul gcig ñid thob tha dad med ।
de las raṅ bzin 'dsin ma yin ॥ 28 ॥

अनवस्थेन्द्रियैक्यं वा द्विग्राह्यो न त्रिगोचरः ।
न भेदो विषयैकत्वे न स्वभावग्रहस्ततः ॥ २८ ॥

*Vṛitti*

yon tan gsum 'phel ba 'grib ba tsam gyis tha dad las sgra la sogs pa'i rigs tha dad ces 'dod do । sgra gcig kho na'i yon tan 'phel ba 'grib ba tsam gyis khyad par gyis mtha' yas pa'i phyir 'dsin pa po dbaṅ po mtha' yas par khas blaṅs par bya dgos so ॥

त्रिगुणोपचयापचयभेदेन शब्दादिजातयो भिद्यन्ते । एक एव शब्दस्त्रिगुणोपचयापचयभेदेन अनन्त इति ग्राहकेन्द्रियानन्त्यमभ्युपगन्तव्यम् ॥

ci ste der yon tan gsum tha mi dad pas rigs gcig ñid yin na ni de ltar na tha dad 'dsin pa bzhin reg pa la sogs pa daṅ 'dsin par thal bar 'gyur ba'i phyir dbaṅ po gcig ṅid du 'gyur te ı thams cad du yon tan gsum po tha mi dad pa'i phyir ro ॥

अथ त्रैगुण्याभेदेन जात्यैकत्वात् शब्दभेदवत् स्पर्शादयोऽपि गृह्येरन्निति इन्द्रियैकत्वं स्यात्। सर्वत्र त्रैगुण्याभेदात् ॥

*Tīkā.*

V.T., folio 72 *b.*—yon tan gsum rnams ni yon tan gsum ñid de ı 'jig rten gsum ñid bzhin no ı 'phel ba ni lhag pa'o ı 'grib pa ni dman pa ñid do ı tsam gyi sgra ni raṅ bzhin gyi dbye ba rnam par bcad pa'i ched du ste ı sñin stobs la sogs pa'i yon tan gyi raṅ bzhin sgra la rnams kyi raṅ gi ṅo bo dbye ba yod pa ma yin no ı de las kyaṅ zhi ba daṅ 'jigs pa daṅ rmoṅs pa daṅ drug las skyes pa la sogs pa'i bye brag gis mtha' las pa'i phyir dbaṅ po mtha' yas par 'gyur ro ı ji ltar sgra la sogs pa'i rigs kyi dbye ba yon tan 'phel ba daṅ 'grib pa las 'gyur ba de ltar drug las skyes pa la sogs pa'i dbye ba yaṅ no ॥

त्रिगुणा एव त्रैगुण्यम्। त्रैलोक्यमितिवत्। वृद्धिरुपचयः। अपचयो ह्रासः। स्वरूपभेदव्यवच्छेदार्थं

मात्रशब्दः । सत्त्वादिगुणस्वरूपः न शब्दादिस्वरूपतो भिद्यते । ततश्च सुखदुःखमोहषड्जादिभेदनानन्त्यादिन्द्रियानन्त्यं स्यात् । यथा शब्दादिजातिभेदः गुणोपचयापचयाभ्यां भवति तथा षड्जादिभेदोऽपि ॥

*Ibid.*, folio 73 *a.*—dbyibs kyi bdag ñid can gyi rigs ni yod pa kho na ste । yon tan gsum tha mi dad na yaṅ yon tan gsum gyi gnas skad pa tsam tha dad pas sgra la sogs pa'i rigs rnams tha dad do । de skad du yaṅ bśad pa । sgra daṅ reg bya daṅ gzugs daṅ ro daṅ dri ste lṅa rnams ni । bde ba daṅ sdug bsṅal daṅ gte mug rnams kyi ṅes par bkod pa'i bye brag rnams zhes pa'o । de'i phyir sgra'i rnam par yoṅs su 'gyur ba'i bde ba la sogs pa rnams ni dbyibs kyi khyad par gaṅ gis yaṅ dag par bkod pa rnams te । dbyibs gzhan gyis yaṅ dag par bkod pa rnams ni reg bya la sogs pa rnams so zhes ston par byed de । de'i phyir dbaṅ po ṅes par gzuṅ par bya ba ñid yin ciṅ । dbaṅ po mth'a yas pa ñid kyaṅ ma yin te । dbyibs rnams ni lna ñid kyi phyir ro ॥

आकारात्मिका जातिरस्त्येव । त्रिगुणाभेदेऽपि त्रिगुणावस्थामात्रभेदेन शब्दादिजातयो भिद्यन्ते । तथा चोक्तम् । शब्दस्पर्शरूपरसगन्धाः पञ्च सुखदुःखमोहाना-

मवस्थाविशेषा इति। तस्मात् शब्दाकारेण परिणता सुखा-
दयो येनाकारेण संस्थितास्तद्भिन्नाकारेण संस्थिताः
स्पर्शादय इति। तस्मान्नियतेन्द्रियग्राह्यत्वं भवति, न पुन-
रिन्द्रियानन्त्यम्। आकाराणां पञ्चत्वात्॥

*Vṛitti.*

द्विग्राह्य इति—

gaṅ phyir dbyibs ni gñis kyi gzuṅ bya ri bo la sogs pa'i dbyibs la mig daṅ reg bya dag gi śes pa mthoṅ ba'i phyir ॥

कुत आकारो द्वीन्द्रियग्राह्यः। दैर्घ्याद्याकारस्य दर्शन-
स्पर्शनाभ्यां ग्रहणदर्शनात्॥

न त्रिगोचर इति—

dbyibs kyis byas pa'i rigs kyi bye brag 'dod pa'i ltar na ni sgra la sogs pa ni rna ba la sogs pa la ma 'dsin par 'gyur te। gaṅ gi phyir zhe na। । dbyibs pa'i rna ba daṅ sna daṅ lca rnams kyis gzuṅ par bya ba ma yin pas mthoṅ bzhin pa'i sgra daṅ 'dri daṅ ro rnams mṅon sum ma yin par 'gyur ro ॥

आकारकृतजातिभेदाङ्गीकारे शब्दादयो श्रोत्रादिभिर्न-
गृह्येरन्। कुतश्चेत्। न त्रिगोचर इति। आकारस्य

